# श्रीरामकृष्णपरमहंसदेवस्य चरितम्



स्वामी हर्षानन्दपुरी

# श्रीरामकृष्णपरमहंसदेवस्य चरितम्

स्वामी हर्षानन्दपुरी




RAMAKRISHNA MATH
BANGALORE 560 019

**Śrī-Rāmakṛṣṇa-Paramahaṁsa-Devasya Caritam—**
*Life of Sri Ramakrishna in Sanskrit*
Written and Published by Swami Harshananda, President,
Ramakrishna Math, Bangalore 560 019.
Phone : 66 13 149.

*First Edition* : 1975
*Second Edition* : 1997
1 M 1 C

**Price : Rs. 5/- only**

*Printed by*
B. N. Nataraj
Sri Nithyananda Printers
Ashoknagar, Bangalore 560 050
Phone: 62 6027

## PREFACE

This book was originally written in 1972 and published serially in the Sanskrit Daily SUDHARMA of Mysore during 1975. In the same year, it was brought out as a book from the Sri Ramakrishna Ashrama, Mysore. We gratefully remember the late Sri N. K. Varadaraja Iyengar of the SUDHARMA fame.

The book is being reprinted now after a lapse of 22 years with some minor corrections and modifications.

During the last one, or even two, decades, there has been a spurt of interest in learning Sanskrit. Hence we are taking this opportunity to reprint the book, which is a good introduction to the life of Sri Ramakrishna, written in simple Sanskrit.

We hope that earnest students and lovers of this Devabhāṣā, will receive it with enthusiasm.

**S. H.**

# विषयसूचिका

# श्रीरामकृष्ण-परमहंस-देवस्य चरितम्

## १

## अवतरणिका

**ॐ स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे ।**
**अवतारवरिष्ठाय रामकृष्णाय ते नमः ।।**

श्रीरामकृष्णपरमहंसदेवो विश्वेऽस्मिन् नरनारीसहस्रैः श्रीमन्नारायणस्यैव वरावतार इत्यद्यापि पूज्यमान आस्ते। नास्ति खलु काचिदप्युत्प्रेक्षाऽत्र। किन्तु यैर्यैरासनव्रजनादिचरितैः भाषणभजनादिभणितैः त्यागयोगादिगुणैः स तथा बभूव—इत्येतत्कुतूहलपरिहारार्थं तज्जीवनकथाऽऽपेक्षाऽस्त्येव। तदेवं वक्ष्यामः कविभिरीडितं कल्मषापहं श्रवणमङ्गलं श्रीमदाततं तत्कथामृतं यत्पानेन काकोऽपि शुकायते ।।

## २

## जननम्

**यदा चर्मवदाकाशं वेष्टयिष्यान्ति मानवाः ।**
**तदैव जायते सिंहः शृगालस्य कुलेऽधमे ।।**

न हि विस्तीर्णागाधमनसः सर्वलोकसम्पूज्याः साधुजनपरित्राण-

प्रतिज्ञाः धर्मसंस्थापनदृढव्रताः अवतारपुरुषाः सकलदैवीसम्पद्धरितं कुलं विना कुत्रापि जायन्ते ।

एवं च सति अभयाद्यनभिमानान्तकृत्स्नदैवीसम्पद्युक्तं * क्षुदिराम-चट्टोपाध्यायं तदभिमतां तदनुरूपां तदनुवर्तिनीं चन्द्रमणिदेवीं च स्वपितरौ वव्रे भगवान्नारायणो हरिः लोकेऽस्मिन्नवतरणार्थम् । तत्कथ-मित्युच्यते—

गयाक्षेत्रं गतवान् क्षुदिरामः एकदा गदाधरस्य विष्णोः सन्दर्शनार्थम्। तत्र श्राद्धादिकृत्यानि समापय्य भक्तिपुरस्सरं भगवतो दर्शनं कृत्वा निद्रां गतः। अत्यद्भुतं रोमहर्षणं स्वप्नं चापश्यत् । तस्मिन् स्वप्ने धृतशंख-चक्रगदापद्मं चतुर्भुजं कोटिसूर्यसमप्रभं मन्दमन्दहसिताननाम्बुजम् अम्बुजाक्षं श्रीमन्नारायणं ददर्श । स च भगवानुक्तवान् भक्ताग्रेसरं क्षुदिरामं प्रति, 'धर्मस्योद्धरणार्थं साधुजनसंरक्षणार्थं च युष्मद्गृहे शीघ्रमेव सम्भविष्यामि' इति । 'दीनोऽकिञ्चनश्चाहं त्रिभुवननाथं लक्ष्मीपतिं त्वां कथमिव सेवे?' इति वदन्तं भीतं तं 'पत्रपुष्पफलतोयादिषु एकैकेनापि तोक्ष्यामि' इति सान्त्वयित्वा नारायणः तिरोहितः।

आगतवांश्च स्वग्रामं वङ्गदेशस्थं कामारपुकुरं भगवद्रूपवचनादि-सुधाभरित-हृदय-कलशः क्षुदिरामः । काले (क्रिस्ताब्दे १८३६तमे संवत्सरे फेब्रवरीमासे १७ दिनाङ्के फाल्गुनशुक्लद्वितीयायां तिथौ) प्रसूतवती च चन्द्रमणिदेवी सर्वशुभलक्षणसंपन्नं मनोहरं पुत्ररत्नम्।

---

* भगवद्गीता १५. २-३.

गयापतेर्गदाधरस्यैव अवतारत्वात् कृतं नाम गदाधर इति तस्य। आस्तां च द्वावग्रजौ एका च अग्रजा गदाधरस्य। अन्याऽवरजा स्वसा जाता तदनन्तरम्॥

## ३
## बाल्यम्

प्रवर्धमानः शिशुर्बालकोऽभूत्। दृढतनुरारोग्यवान् सुन्दरवदनो मुग्धबालकोऽयमत्यन्तं सर्वलोकप्रियः। पायंपायमपि तन्मुखारविन्द-मकरन्दं लोकोऽयमसञ्जातसन्तृप्तिरेवाभूत्। शैलविद्रावकरं मृदुमधुरं तद्गानं श्रावं श्रावमपि भूय एवाभिववृधे तच्छ्रोतुमिच्छा। नयनहरं तन्नृत्यं दर्शं दर्शमपि दृढतरैव दिदृक्षाऽभवत्।

सत्यपूतं वचस्तस्य। श्रुतिधरा च मेधाशक्तिः। क्षुरधारासमा प्रज्ञा। अभयं सहजम्। कलहोऽज्ञातः। प्रत्युत विवदमानयोरुभयोः प्रेमपूर्वकं माध्यस्थ्यं तस्य प्रकृतिः। अत एव सर्वाणि मित्राणि तस्य आज्ञानुवर्तीनि।

पाठशालां प्रेषितः पित्रा गदाधरः। तत्र समवयस्कैरितरबालकैस्सह साहचर्यक्रीडादिभिः सुख्यपि गणितादिविद्या नैव रुरुचे तस्मै। अतो मन्दगतिरभूद्विद्याभ्यासः॥

## ४
## गदाधरस्य आध्यात्मिकी प्रवृत्तिः

कैशोर्यादारभ्यापि दृष्टा गदाधरस्याध्यात्मिकी प्रवृत्तिः। तथा हि—

षष्ठे वयस्येकदा स्वगृहस्य समीपे हुडुम्बान् भक्षयन् शालिक्षेत्रपालीषु शनैश्शनैर्गच्छान्नाकाशं प्रति दृष्टिप्रसारणमकरोत्। किं ददर्श तत्र? नीलबलाहकोपरि अर्धवृत्ताकारां सितबलाकपक्षिमालाम्। अत्यद्भुतमेतद् दृश्यं तस्य चेतो जहार। पतन्तं तं दृष्ट्वा व्याकुलीभूतचित्ताः समीपस्था जनाः स्वात्मनि रुद्धचेतसं तं गृहं निन्युः। शीघ्रं व्युत्थितचित्तोऽपि तस्य मातापितरौ चिन्तामपरिमेयामापतुः।

अथ पुनः संवत्सरादूर्ध्वं ललनाभक्तजनैस्सह स्वग्रामादनतिदूरस्थं विशालाक्षीदेवालयं गच्छन्नासीत्। ताभिः प्रार्थितस्सन् भक्तिगीतानि गायन्नासीत्। सहसा भक्त्युद्रेकात् विगलितमना अभूत्। भीत्या किंकर्तव्यविमूढाभिस्ताभिर्देवीनामसूच्चार्यमाणेषु संज्ञां प्रतिपेदे। निरस्त-चिन्ताः सत्यः सर्वाः स्त्रियः समापयाञ्चक्रुस्तीर्थयात्राम्।

अथान्यदा शिवरात्रिकाले रङ्गभूमौ शिवपात्राभिनयसमये शिवाय-मानः शिवे भावैक्यं गतः। अकाण्डे समाप्तं नाटकम्॥

## ५

## पितुर्मरणं गदाधरस्य उपनयनञ्च

अष्टमे वयसि प्राप्ते गदाधरे पिता क्षुदिरामो रामपादं गतः। आत्मशोकमात्मन्येव निधाय गदाधरो जननीशोकापनोदार्थमविरतं प्रायतत।

नवमं वर्षं प्राप्तम्। तस्योपनयनसंस्कारं कर्तुं निश्चित्याग्रजो गृहस्वामी रामकुमारः सन्नद्धो बभूव। कतिपयदिनेभ्यः प्रागेव परिचारिका

धनी शूद्राणी गदाधरमुपागत्य अतीव श्रद्धापुरस्सरम् उक्तवती 'भवदुपनयनमहोत्सवसमये भवान् प्रथमभिक्षादानावसरं मह्यं दद्याच्चेद् धन्या भविष्यामि' इति। तच्छ्रद्धासंस्पृष्टहृदयो गदाधरस्तां प्रति वचनं दत्तवान्। अत एव स भ्रातरं रामकुमारमुपागत्य धनीशूद्राण्याः प्रथमभिक्षास्वीकृतिविषये आत्मनो निर्धारं विज्ञापयाञ्चकार। साध्वसोपहतचित्तो रामकुमारः एतस्मात्तं वारयितुं बहूद्यमं चकार, ब्राह्मणवटोर्यज्ञोपवीतसंस्कारसमये शूद्राण्याः मुखदर्शनस्यापि निषिद्धत्वात्। किन्तु विफलप्रयत्नः सोऽन्तेऽनुमतिं ददौ। निश्चितदिनाङ्के सर्वं कर्म यथाविधि निर्वर्तितम्। निर्वृत्तप्रतिज्ञत्वाद् भविष्यल्लोकगुरुः शबरीवच्छान्तवाञ्छत्वाच्छूद्राणी च मुदितचित्तौ बभूवतुः।

यज्ञोपवीतधारणेन प्राप्ताधिकारो गदाधरः शीतलारघुवीररूपे कुलदेवते पूजयन् तत्कर्मणि चिरकालं क्षपयन् आनन्दसागरे निमग्नोऽभूत्। समाप्तश्च विद्याभ्यासः। कदाचित् सखिभिस्सह नृत्यगीतयुक्तनाटकाभिनये कालो नीतः। कदाचिच्च चित्रलेखनम्, अन्यदा च मृत्तिकया देवतामूर्तिकल्पनं रञ्जयामासतुस्तस्य चेतः॥

६

## कल्कत्तानगर्यां रामकुमारो गदाधरश्च

क्रिस्ताब्दे १८४९तमे संवत्सरे रामकुमारो जीविकार्थं कल्कत्तानगरीं प्राप्य तत्र झामापुकुराख्ये स्थाने संस्कृतपाठशालामेकां स्थापयामास। सच्चारित्र्य-पाण्डित्य-ऋजुजीवनादिभिः सोऽचिरेण प्रसिद्धो बभूव च।

चत्वारि संवत्सराणि गतानि। स्वग्रामादानिनाय रामकुमारो गदाधरं तस्य शिक्षायै स्वसहायार्थं च। गदाधरस्त्वग्रजं पितृवदेव मत्वा तस्य सेवायां निरतोऽभूत्। विद्याभ्यासे तु पूर्ववदेव निरुत्साहः। तस्योत्साहं जनयितुं रामकुमारेण महता परिकरबन्धेन प्रयतितेऽपि स तदवस्थ एव। उक्तवांश्च गदाधरो भ्रातरमुद्दिश्य—"यस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति, येन सर्वमिदं ततम्, यद्गत्वा न निवर्तन्ते मुमुक्षवः, यल्लब्ध्वा पुमानमृतो भवति तत्परमात्मतत्त्वमेव वेदितुमिच्छामि परया विद्यया; नैव गृह्णीयामपरां विद्यां कदलीफलतण्डुलभरितवस्त्रग्रथनरूपां कदाचिदपि !" इति। तच्छ्रुत्वा किं कर्तव्यविमूढोऽपि रामकुमारो निर्बन्धं न कृतवान्॥

७

## राज्ञी रासमणिः

पुरा किल मत्स्यगन्धा सत्यवती स्वपुत्रेण कृष्णद्वैपायनेन वैदिकं धर्मचक्रं प्रवर्तयामास। तेन कर्मणा च कृष्णद्वैपायनो भगवान् वेदव्यासो बभूव। आधुनिककालेऽपि धर्मचक्रस्य पुनः प्रवर्तनं कैवर्तीनिमित्तमेवाभूत्। तन्निर्मितकालिकामन्दिरमेव स्वलीलाक्षेत्रं प्रतिपद्य साधको गदाधरः सिद्धो रामकृष्णः सकलसाधनसाध्योऽवतारपुरुषः परमहंसदेवश्च बभूव। सनातनधर्मस्य पुनरुज्जीवनञ्च कृतवान्।

सा च कैवर्ती नाम्ना 'रासमणिः राज्ञी' इति सर्वजनविख्याता। कल्कत्तानगरनिवासिन्येषा बहुधनाढ्या कालिकादेव्याः भक्ता च। कालिकामातुरादेशात् सा गङ्गायाः पूर्वतीरे स्थिते दक्षिणेश्वराख्ये ग्रामे

बृहद्देवालयमेकं निर्मापयाञ्चकार। आसीत् किन्तु महाविघ्नः कश्चित् देवताविग्रहप्रतिष्ठापनविषये विध्युक्तपूजानैवेद्यादिव्यवस्थाविषये च। शूद्राणीनिर्मितत्वान्न कोऽपि आचारशौण्डो वा कर्मठो वा ब्राह्मणस्तत्कर्तुं सिद्धः। महता परिश्रमेण अपारधनव्ययेन च कृतं सर्वमिदं मोघायते इति चिन्ताप्रचयबाधिता राज्ञी रामकुमारेण सह सम्मन्त्रयाञ्चक्रे। स च शास्त्रविचक्षणो महामना एवं निर्णीतवान्—यदि सा शूद्रा ब्राह्मणश्रेष्ठाय स्ववंशगुरवे मन्दिरमेतद् विधिपूर्वकं दद्यात् तर्हि सर्वे आक्षेपा निरस्यन्ते—इति। 'साधु ! साधु !' इत्यपास्तशङ्केषु सर्वेषु वदत्सु असीमानन्दहृदया कैवर्तराज्ञी रामकुमारमेव निर्विघ्न-तत्कार्य-समाप्तये नित्यपूजार्थं च भृशं ययाचे। संमेने च स स्ववचनं स्वेनैव प्रत्याख्यातुम् अशक्यत्वात्। प्रस्तुता च पूर्वसिद्धता महोत्सवाय॥

## ८

## दक्षिणेश्वरे कालीमन्दिरस्य उद्घाटनम्

क्रिस्ताब्दे १८५५तमे संवत्सरे स्नानयात्राख्यज्येष्ठपूर्णिमायां दक्षिणेश्वरस्य भवतारिणीकालिका-मन्दिरम् उद्घाटितम्। बहुविश्रुताः शास्त्रज्ञाः कुलीनाः सदाचारवन्तो ब्राह्मणाः सर्वत आगत्य महोत्सवे भागिनो बभूवुः। सर्वं कर्म विध्युक्तं निर्विघ्नं समाप्तम्। षड्रसोपेतमन्नं सहस्रेभ्यः प्रकामं प्रदत्तम्। 'दीर्घायुष्मती भव !' 'त्वयि खलु वितरतु भद्रम् !' इत्यादिवचनै रासमणिं प्रति आशिषः कृत्वा सर्वे निर्जग्मुः। रामकुमारश्च कालिकामन्दिरे पूजादिकर्तव्यनिरतोऽभूत्॥

## ९

## मथुरानाथविश्वासः

चतस्रो दुहितर आसन् रासमणेः। तृतीया परिगृहीता मथुरानाथ-विश्वासेन। यदा सा दिवङ्गता तदा जगदम्बादासी नाम चतुर्थाऽपि तेनैव परिणीता। जामातरि मथुरानाथे दृढविश्वासो रासमणेः बुद्धिमत्त्वाद् बहुकार्यक्षमत्वाच्च तस्य। अत एव ददौ तस्मै स्वस्याः क्षेत्रवित्तादीनां निर्वहणकर्तव्यम्। अयःपिण्डमयस्कान्तं प्रति, षट्पदं पुष्पं प्रति, सरिदिव सरित्पतिं प्रति मथुरानाथो गदाधरं प्रति आकृष्टवानवशः सन्। तस्य गदाधरस्य श्रीरामकृष्ण इति लोकविख्यातं नाम दत्तवानेष मथुरानाथ एव इति एकोऽभिप्रायः। इत ऊर्ध्वमतो गदाधरं श्रीरामकृष्ण इति नाम्नैवाह्वयामः।

संवत्सरानन्तरं रामकुमारो मृत्युमाप्तवान्। तस्य स्थाने श्रीरामकृष्णो नियोजितो देवीपूजाकर्मणि। तस्य भागिनेयो हृदयरामो नाम षोडश-वर्षीयस्तरुणोऽपि तस्य साहाय्यार्थं नियोजितः।

नासीद्भक्तेः सीमा श्रीरामकृष्णं प्रति मथुरानाथस्य। क्षेत्रादीनां स्वाम्यपि विद्याधनजनबलवानपि स श्रीरामकृष्णं पितृवन्मत्वा पितेति आह्वयन् परिचारकवत् परिचरति स्म। तत्सुखसुखित्वमेव तस्य महत्वाकांक्षा। एकमात्रार्भकं प्रति मातुरपि प्रेमैवं भवेद्वा न वा न जानीमहे।

आत्मकालानन्तरं न कोऽपि पालयति श्रीरामकृष्णमित्याशङ्क्य, एकदा मथुरानाथो विस्तीर्णं क्षेत्रमेकं तत्फलभोगाय दातुकामः तत्प्रस्तावं

कृतवान् श्रीरामकृष्णस्य सकाशे। तच्छ्रुत्वा ज्वलदग्निकल्पसंक्रोध-संयुक्तः श्रीरामकृष्णः 'धिग् धिक् त्वमेवं मां संसारिणं कर्तुकामम्!' इत्युत्क्रोशयन् तं कामं प्रहर्तुकामो यष्टिहस्तो दधाव ॥

## १०

## आध्यात्मिकसाधनप्रारम्भः कालिकादेव्याः प्रथमदर्शनञ्च

उपक्रान्तमेवं पूजाकर्म भवतारिणीमन्दिरे। उपप्रवृत्तञ्च अत्यद्भुत-मदृष्टपूर्वं मानवमात्रेण साधयितुमशक्यमाध्यात्मिकसाधनजातं सह पूजया। अहो महद्भाग्यमस्माकं यदेतत् श्रीरामकृष्णस्य बहुमुखसाधन-समूहस्य तत्साक्षाच्छिष्यकृतं लेखप्रमाणमस्तीति।

यथाविधि श्रद्धाभक्तिपुरस्सरं साङ्गं क्रियमाणमासीत् सर्वं पूजाकर्म। किन्तु 'यस्या देव्या भवतारिणीति ख्यातायाः पूजाकर्मणि अहं दिवानक्तं निरतोऽस्मि साऽस्ति वा न वा ? अस्तीति चेत्कथमिव तां पश्येय-मुपलभेय !' इत्येवं रूपाऽत्यन्तं स्पृहाऽभवद्रामकृष्णस्य। तदर्थं महदुद्यमं कृतवान्। पूजाकर्मणि, तत ऊर्ध्वमवशिष्टः सर्वः कालो ध्यानजप-सङ्कीर्तनप्रार्थनादिषु विचित्रसाधनकर्मसु विनियुक्तस्तेन। पूजादिकर्मापि क्रमेण प्रचयं जगाम। दीर्घकालनैरन्तर्यसत्कारसेवितत्वाद् एतस्या-भ्यासस्य, देव्याः दिव्यस्वरूपदिदृक्षाऽतितीव्रतमाऽभूत्। तत्सोढुमशक्नु-वन् स एकदा देव्या एव खड्गेनात्मानं हन्तुमुद्युक्तवान्। झटिति जडशिलामूर्तिरूपा देवी सचैतन्यं स्पन्दमाना आत्मानं दर्शयामास। तस्मिन्महदानन्दसागरे निमज्जन् त्रीणि दिनान्येवं स्थित्वा चतुर्थ एव संज्ञां

प्रतिपेदे। एतदनुभवादूर्ध्वं यथाविधि पूजाकर्म कर्तुं न शशाक व्युत्थान-समाध्योरन्तराले स्थितत्वाच्चित्तस्य । मथुरानाथस्तु पूजादिकर्मविषयेऽन्यां व्यवस्थामकरोत् ॥

## ११

## श्रीरामकृष्णस्य विवाहः

उन्मत्तो भवन्नास्ते श्रीरामकृष्ण इति वार्तामाकर्ण्य माता चन्द्रमणिर्बहुव्याकुलचित्ता बभूव। आगमितवांश्च श्रीरामकृष्णः कामारपुकुरं स्वग्रामम्। आगमात् कतिपयदिवसानन्तरं तस्य भगवदुन्मादः क्रमेण शान्तो बभूव।

ग्रामाद्बहिरेवासीत् श्मशानं यत्र गन्तुं रात्रौ प्रगल्भोऽपि बिभ्यति स्म । श्रीरामकृष्णस्तु प्रतिदिनं सन्ध्यायां तत्र गत्वा बहुकालं ध्यानादिकर्मस्वात्मानं नियुञ्जान आसीत्। तस्यैतामाध्यात्मिकीं प्रवृत्तिं दृष्ट्वा जायमानवैराग्याद्भीत्वा विवाह एव वैराग्यस्य प्रतियोगीति निश्चित्य अग्रजो रामेश्वरो माता चन्द्रमणिश्च तदर्थं कन्यान्वेषणोद्यमं चक्रतुः। चित्रमेतद्यत् श्रीरामकृष्ण एव तदुद्यमे साहाय्यं कृतवान्। स एवावदत् यत् 'मम लीलासहचारिणी जयरामवाट्याख्ये पार्श्वग्राम एव श्रीरामचन्द्रमुख्योपाध्यायस्य गृहे मदर्थमेव रक्षिता वर्तते ' इति।

क्रिस्ताब्दे १८५९तमे संवत्सरे षड्वार्षिक्याः श्रीसारदामणिदेव्याः पाणिग्रहणं कृतवान् श्रीरामकृष्णः। कतिपयमासानन्तरम् आगतवान् पुनः दक्षिणेश्वरं भगवदुन्मादे निमज्जनार्थम् ॥

## १२

## भैरवी ब्राह्मणी जटाधारी च

अनन्तानि अतीन्द्रियदर्शनानि रामकृष्णस्य। तानि दृढीकर्तुमत्येतुं च महत्प्रयत्नः कृतःतेन। परिणामतः तत्पाञ्चभौतिकं शरीरं जर्जरितमभवत्। निद्रा निर्गता। आगतस्तापः आपादतलमस्तकम्, यच्छमनार्थं गङ्गावारिणि चिरकालनिमज्जनमावश्यकमभवत्। हृदयरामस्य प्रीतिपूर्वकसेवा वा मथुरानाथेन नियोजितस्य वैद्यस्य भैषज्यं वा सर्वं निष्फलं बभूव। साधनकलापस्तु क्रियमाण एवासीत्।

एतत्पर्यन्तं श्रीरामकृष्णः स्वमनःकल्पितानि साधनान्येव कृतवान्विना गुरुसाहाय्यम्। किन्तु गुरुपरम्परासम्प्रदायमानार्थम् आत्मनोऽपि गुरुस्वीकृतिरवश्यैव लोकगुरुत्वात्तस्य। अतो दैवादिवागता तत्र काचित् संन्यासिनी नामतो योगीश्वरी भैरवी अथवा भैरवीब्राह्मणीति। समयस्तु, क्रिस्ताब्दं १८६१तमे संवत्सरम्। तेजस्विनी सुरूपा बहुशास्त्राध्येत्री तपस्विनी सा श्रीरामकृष्णं दृष्ट्वैव हृष्टवदना घुष्टवती "वत्स ! तव दर्शनाय चिरेणान्वेषणं कृतवत्यद्यैव कृतार्थाऽस्मि" इति।

तद्दर्शिते मार्गे प्रवृत्तो भूत्वा श्रीरामकृष्णः शीघ्रमेव सकलशाक्तवैष्णवतन्त्रोक्तसाधनानि अनुष्ठाय झटिति लब्धवान् तत्फलानि सर्वाणि। शरीरतापश्च तयैव निर्दिष्टः चन्दनलेपनपुष्पमाल्यधारणादिभिरुपायैः सपद्येव निवृत्तो भक्त्युद्रेकप्रभावत्वादेतादृशस्य तापस्य।

नैतावतैव तृप्ता भैरवीब्राह्मणी। प्रतिजज्ञौ च सा 'श्रीरामकृष्णः परमेश्वरस्यैवावतारः' इति। स्मृतीतिहासपुराणादिप्रमाणपूर्वकं तत्सिषा-

धयिषाऽभवत्तस्याः। तच्छ्रुत्वाऽतीव कुतूहलेन श्रीरामकृष्णो मथुरानाथं चोदयामास विद्वत्सदसो रचनार्थम्। तदनुसारेण मथुरानाथो विद्वत्सद एकं व्यरचयत्। तदानीन्तनकाले सुप्रसिद्धाः विद्वांसो गौरीपण्डितपद्मलोचनादयः सर्व आगत्यावस्थितास्सदसि। स्मृत्यादिप्रमाणोपबृंहितां भैरव्या वाग्वैखरीं शब्दझरीं निशम्य विश्वे विद्वांसस्तत्प्रतिज्ञां श्रीरामकृष्णो भगवदवतारी इत्याख्याम् अनुमोदयामासुः। श्रीरामकृष्णस्तु सस्मितं भणितवान् "नास्ति किञ्चिदप्यस्वास्थ्यं मयीति दृढं निश्चितमद्य!" इति।

अथागतो जटाधारी नाम भगवति परमवात्सल्यभरितो भक्तशिरोमणिः कश्चित्। बभूव तस्य वशे रामलालाख्यः कांस्यः कश्चन शिशुरूपः श्रीरामविग्रहः। चिरकालाभ्यस्तवात्सल्यभक्तिपरिपाकात् सः तस्मिन्नेव विग्रहे सचैतन्यं भुवनमोहकं शिशुरूपं भगवद्रामचन्द्रं पश्यन्नासीत्। श्रीरामकृष्णेन प्राप्तं जटाधारिणः सख्यम्। रामलालश्च आकृष्टः श्रीरामकृष्णेन। आदित एव दृष्टवान् श्रीरामकृष्णो जीवन्तं रामलालम्। स्वल्पकालानन्तरं यदा जटाधारी प्रयातुमिष्टवांस्तदा रामलालस्तेन सह गन्तुं निराकरोत् श्रीरामकृष्णास्थितमनस्त्वात्। ययौ च स भक्ताग्रेसरः स्वहृदये निक्षिप्य रामलालाख्यं सच्चिदानन्दनिधिम्॥

## १३

## तोतापुरी

अन्ते आगतवान् तोतापुरी नाम यतिराजो यथाजातरूपधर आजानुबाहुर्ज्वलदग्नितेजो गुरुदीक्षाक्षततमो निर्गतनिखिलद्वैतावभासो

भाविलोकगुरोः साधनसम्पत्तिपूरणार्थं तत्प्रयत्ने स्वसिद्धिसम्पूर्त्यै च। भवतारिणीमातुरनुज्ञां प्राप्य श्रीरामकृष्णो मुदा संन्यासं स्वीकृत्य परमाद्वैत-बोधकं महावाक्योपदेशं विधिपूर्वकं स्वीचकार तस्मात्। अत्यल्पकाले एव सकलद्वैतवर्जितावस्थां निर्विकल्पाख्यसमाधिमारूढवांश्चित्तपटं पुनः पुनः आयान्तीं कालिकामूर्तिं ज्ञानखड्गेन छित्त्वा। यल्लाभार्थमात्मा चत्वारिंशद्वर्षाणि उद्यमं चक्रिवांस्तत्सहसा प्राप्य तस्मिन्नविरतं त्रीणि दिवसानि तस्थिवांसं तमद्भुतमदृष्टपूर्वं शिष्याग्रेसरं दृष्ट्वा परमविस्मया-कुलो यतिश्रेष्ठस्तत्रैकादशमासान् क्षपितवान्।

एतन्मध्ये एकदा तीव्रोदरव्याधिग्रस्तः सन् तत्पीडां सोढुमशक्नुवन् गङ्गायां स्वदेहं मज्जयित्वाऽऽत्महत्यां कर्तुमुद्यमं चकार। तदा भवतारिणीकालिकाया दर्शनं सम्प्राप्य सगुणसाकारदेवदेव्योऽपि निर्गुण-निराकारस्य परस्य ब्रह्मण एवाभिव्यक्तयः इत्येतज्ज्ञानं लब्ध्वा तद्विषयक-एतत्-स्वाज्ञानार्थं लज्जितवान्। गुरुकल्पं स्वशिष्यं बहुधा प्रीतिवचनैः सत्कृत्य स्वपन्थानं प्रचक्रमे (क्रिस्ताब्दे १८६६तमे संवत्सरे)॥

## १४

## महम्मदीय-क्रैस्त-धर्मयोरनुष्ठानं सिद्धिश्च

अथेदानीं श्रीरामकृष्णो महम्मदीयधर्मेऽवधानं दत्तवान्। गोविन्दो नाम सूफीमतानुयायी साधकोत्तमस्तदा तत्रावात्सीत्। तस्मात् लब्ध-दीक्षस्सन् देवीमन्दिरप्राङ्गणाद्बहिर्म्लेच्छवदेवोषित्वा त्रिभिर्दिवसैरेव तत्रोक्तानि तत्त्वानि तत्प्रवर्तकं सिद्धपुरुषं च साक्षात्कृतवान्।

तदूर्ध्वं क्रैस्तमतविषयं श्रुत्वा तत्प्रवर्तकं मेरीमात्रा सह वर्तमानं शिशुरूपं येसुक्रिस्तदेवं ध्यात्वा तमपि साक्षात्कृतवान्। सोऽपि तद्देहे लीनो बभूव।

एवं विविधविचित्रधर्मपथोऽनुसृत्य तेषां सर्वेषां गतिरेकमात्रं परमेश्वर इति स्वानुभवेन विदित्वा साधको गदाधरः सर्वधर्मसंसिद्धो निखिल-जगद्गुरुः श्रीरामकृष्णपरमहंसदेवो बभूव।

तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता भागवतोत्तमाः। अथ किमु वक्तव्यं स्वयं गदाधरः तीर्थानि तीर्थीकुरुते इति अतस्तदर्थं श्रीरामकृष्णदेवो वाराणसीबृन्दावनाद्यनेकतीर्थक्षेत्राणि सन्ददर्श मथुरानाथेन सह। गयाक्षेत्रं तु न गतवान् देहोत्सर्गशङ्कया गयापतेरवतारत्वात्स्वस्य। सुसमाप्ता च यात्रा॥

## १५

## कामारपुकुरं प्रति पुनरागमनम्

द्वादशवर्षपर्यन्तं कृताविरतसाधनफलात् श्रीरामकृष्णदेवस्य देहा-रोग्यं शिथिलीभूतम्। अतस्तद्वृद्धये क्रिस्ताब्दे १८६८तमे संवत्सरे स्वग्रामं कामारपुकुरं गतवान्, अनारब्धलोकशिक्षाकार्यत्वात् तदर्थमारोग्य-लाभस्य महदावश्यकत्वाच्च। तेन सह गतौ भैरवीहृदयरामौ च। भैरवी तु स्वल्पकालानन्तरं वाराणसीं जगाम।

तत्रावसत् श्रीरामकृष्णः संवत्सरमेकम्। पञ्चदशवर्षीया श्रीसारदा-मणिदेवी च तत्रागच्छत् पत्युः परिचर्यायै स्वशिक्षायै च। परमाद्वैतानुभूतिं

प्राप्तवानपि तीव्रतमवैराग्यवानपि श्रीरामकृष्णदेवः प्रदीपवर्तिसंस्करणादि-सामान्यव्यवहारकार्यादारभ्य भगवद्ध्यानसमाधिपर्यन्तं समस्तं तां शिक्षितवान् लोकशिक्षार्थम्। सर्वव्यवहारसारभूतमुपदेशं च दत्तवान् सूत्ररूपेण।

**'यथा यत्र तथा तत्र यथा यदा तथा तदा ।**
**यं यथा प्रति वर्तेत तं तथा प्रति वर्तनम् ।।'** इति ।

शिक्षयैतया धन्या सती श्रीसारदामणिस्तमनुभवमेवं वर्णयामास संक्षेपतः 'तदा मे हृदि आनन्दपूरितघटः स्थित इति अनुभवन्त्यासम् ' इति ।

पुनरागतो दक्षिणेश्वरं श्रीरामकृष्णदेवः तत्क्षेत्रप्रदेशं चरणार्पणेन तत्तीर्थमवगाहनेन तदधिदेवीं करमर्शनेनाधिकं पवितुम्। देव्या आहूतः सन् एतन्मध्ये मथुरानाथः स्वर्गलोकं जगाम (क्रिस्ताब्दे १८७१तमे संवत्सरे )।

## १६

## दक्षिणेश्वरे श्रीसारदामणिः

'भर्ता मामाह्वयिष्यति अद्य वा श्वो वा' इत्यौत्सुक्यभरिता श्रीसारदामणिः पितृगृहे तिष्ठन्ती कालं निनाय। आह्वानस्य तु छायाऽपि न दृष्टा। एतन्मध्ये चित्तविभ्रान्तो भर्ता विचित्रं जीवनं वहतीति वार्तां श्रुत्वा तदुपलक्षितमात्मविषये प्रवृत्तमुपालम्भं च निशम्य अतीव दुःखाक्रान्तचित्ता सा स्वयमेव पतिदेवं द्रष्टुं तस्य शुश्रूषां च कर्तुं प्रतस्थे। दक्षिणेश्वरं पित्रा सह आगतां तां श्रीरामकृष्णदेवः प्रीतिपूर्वकं सत्कृत्योक्तवान् "आ! बहुविलम्बमागताऽसि यतो मे मथुरानाथो नास्त्यद्य! को वा तव परिचर्यां

कर्तुमर्हति ! '' इति। पत्युरेतां सहजां प्रीतिमुपलभ्याश्वस्ता बभूव सा, 'स तदवस्थ एव यस्यामवस्थायामहं तं पूर्वं दृष्टवती' इति। अपि तु पतिसन्दर्शनार्थं क्रमितदुर्गमदूरत्वात् सा तन्वङ्गी व्याधिपीडिताऽऽसीत्। तस्मात् श्रीरामकृष्णदेवः स्वकक्षे एव तस्या आवसत्यर्थं व्यवस्थामकरोत्। प्रकृतिं गतायां तस्यां प्रेषयामास च 'नहबत्'-आख्यगृहं यत्र स्वमाता चन्द्रमणिदेवी अवसत्तदा ॥

## १७

## षोडशीपूजा

तदागमनादूर्ध्वं कतिपयमासानन्तरं वैशाखमासेऽमावस्यायां तिथौ 'फलहारिणी-कालीपूजा' इति प्रथिते दिनाङ्के श्रीरामकृष्णदेवः षोडशी-पूजाया अनुष्ठानं कर्तुमियेष। तदर्थं समस्तपूजोपकरणं स्वकक्षे सज्जीकर्तुं स हृदयराममनुशशास। आदिष्टा च सारदादेवी रात्रौ पूजासमये भर्तुर्गृहगमनाय। पूर्वनिर्दिष्टकाले पूजाऽऽरब्धा। श्रीसारदादेवी च मुग्ध-बालिकावत् तत्रासीना ददर्श तां पूजां सकुतूहलम्। आचमनप्राणायामादि-प्राथमिकक्रियाः समाप्य श्रीरामकृष्णदेवो मुख्यां षोडशोपचारपूजामारब्धु-कामो भावमुखे स्थितस्सन् सहसाऽऽदिदेश सारदादेवीं कालिकादेवीस्थाने आसनमलङ्कर्तुम्। एतन्मध्ये स्वयमपि योगारूढा सती श्रीसारदामणिः तथैव चकार यथाऽऽदिष्टा। प्रवृत्ता उपचारा एकैकशस्तस्या एव। पूजाभिवृद्ध्यनुगुणं तस्याः समाधिरपि प्रगाढमभूत्। एवमेव श्रीरामकृष्ण-देवस्यापि। अन्ते पूजको रामकृष्णः पूजिता सारदामणिश्च गभीरे

समाधावेकीबभूवतुः। देहातीतात्मैक्यानुभवेनैतेन तावुभौ जगतः पितरावभूताम्। चिरकालानन्तरं प्रकृतिं गतो रामकृष्णदेवः स्वस्य जपमालां तत्पादे निक्षिप्य तन्मूलकं निजार्जितसकलसिद्धीश्च समर्प्य सप्रणामं तुष्टवे—

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके।**
**शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते॥**

इत्यादिना देवीस्तोत्रेण। औपनिषद ऋषिसत्तमः पुरा यद् घुष्टवान्—

**'त्वं स्त्री त्वं पुमानसि**
**त्वं कुमार उत वा कुमारी।**
**त्वं जीर्णो दण्डेन वञ्चसि**
**त्वं जातो भवसि विश्वतोमुखः'॥**

(श्वेताश्वतरोपनिषत् ४. ३)

इति तदद्य पुनरेव प्रमाणीकृतं खलु?

## १८

## सारदारामकृष्णयोरदृष्टपूर्वसम्बन्धः

महाद्भुतोऽदृष्टपूर्वश्चैष सम्बन्धः श्रीसारदारामकृष्णयोर्यत्र दैहिकसंयोगस्य गन्धोऽपि नासीत्। विवाहात् किञ्चित्कालोत्तरं श्रीरामकृष्णदेवः कालिकामात्रे निवेदयामास—'एतस्याः सारदायाः मनसः कामादिभोगलालसाः उत्पाट्य तां निष्कलङ्कां कुरु!' इति। तदेतत् सम्पूर्ण

सफलीकृतम्। कथम्? उच्यते—सभार्यः श्रीरामकृष्ण इति श्रुत्वा तोतापुरी उक्तवान् एकदा 'तेन किम् ? ब्रह्मणि सञ्चरन्मानसस्य देहातीतात्मदृष्टेस्तव न कोऽपि बाधस्तेन! ' इति। अथ भार्याया मनसा सहात्ममनसोऽपि परीक्षा भवत्वेवेति चिन्तयन् श्रीरामकृष्णोऽधुना स्वशय्यामपि सम्भक्तुमनुज्ञां दत्तवान् तस्यै। निद्रां गतायां तस्यां 'यद्देहभोगार्थं सर्वे लोका उन्मत्ताः सोऽत्रैवास्ति। त्वं त्वेनं स्पृहयसि? अथवा सच्चिदानन्दं भगवन्तमन्तर्यामिणं यदास्वादलेशेनापि अतद्वस्तुभोगवासना भस्मीक्रियते भृशम्?' इति स्वमानसं पृच्छन् तद्देहं स्प्रष्टुमुपससार। किन्तु तत्क्षणमेव गाढसमाधिमभाक्षीत्।

अथोऽन्यदा भर्तुः पादसंवहनं कुर्वती सारदा तं पप्रच्छ 'आर्यपुत्र ! भवत्पाणिगृहीतां मां भवान् कथं पश्यति? ' इति। 'या जननी एतद्देहप्रसवित्री या च भवतारिणीमन्दिरस्था एतत्करसंपूजिता निखिलजगज्जननी सैवाधुना मम पादौ सेवमानाऽप्यास्ते !' इति झटित्युक्तवान् अस्तसमस्तभेदः श्रीगुरुः।

कदाचित् श्रीरामकृष्णोऽपि पृष्टवांस्तां 'तव पाणिः मया गृहीतत्वाद्यदीच्छसि त्वं संसारिणीव भवितुं सिद्धोऽस्म्यहं तत्पूरणाय। मे मनस्तु भगवतीपादयोः पुरैव समर्पितम् !' इति। मन्दस्मितवदना सारदामणिरुवाच 'नाहं भवामि कण्टको भवतः पथि ! यदेव भवान् प्राप्य कृतकृत्योऽस्ति तदेवोच्यतां ममापि निःश्रेयसे !' इति। पुरा किल मैत्रेय्यपि एवमेव स्वभर्तारमुवाच याज्ञवल्क्यम्। तदत्र स्मर्तव्यम्।

भगवान् बुद्धदेवः श्रीकृष्णचैतन्यदेवश्च प्राक् संन्यासादुद्वाहितौ;

किन्तु प्रव्रजनादूर्ध्वं तौ द्वावपि स्वभार्याभ्यां वियुक्ताववसताम्। श्रीरामकृष्ण देवस्तु स्वभार्यां न निराकरोत्। प्रत्युत तां प्रीत्या स्वीकृत्य गृहकृत्यादिब्रह्मविद्यापर्यन्तं सर्वं शिक्षयाञ्चकार। नैतावदेव, अष्टमासपर्यन्तं दीर्घकालं स्वशय्यामपि संविभक्तुमनुमतिं दत्तवान्। एवमपि तौ द्वावप्यस्खलितब्रह्मचर्याविव सन्तावासतुः। एतादृशो महानद्भुतो विशेषोऽदृष्टपूर्व इत्युक्तं चेत् तर्हि तस्मिन् काचिदप्युत्प्रेक्षा नास्त्येव ॥

## १९

## शिष्याणामागमनं तच्छिक्षणं च

श्रीरामकृष्णदेवोऽतिमानुषसाधनद्वारा यां दैवीमाध्यात्मिकीं संपदमार्जितवान् तां सत्पात्रे निक्षेप्तुं कालः सन्निहितः। तदर्थमबाधितं स्वातन्त्र्यमत्यन्तमपेक्षितमिति हृदयरामो दक्षिणेश्वरान्निर्गमितवान् दैवात्। स कञ्चिदपराधं कृत्वा मथुरानाथस्य पुत्रस्य त्रैलोक्यनाथस्य क्रोधपात्रं भूत्वा ततो निरगच्छत्। श्रीरामकृष्णदेवस्य गुरुपात्राविर्भावार्थं रङ्गभूमिरेवं सज्जीकृता।

सच्छिष्याणामागमनाय तेभ्यश्च स्वार्जितानुभूतिरूपैश्वर्यप्रदानाय परमव्याकुलान्वितः श्रीरामकृष्णदेवः कदाचित् तत्रस्थमुद्यानगृहमारुह्योच्चैर्घोषयाञ्चकार "हे मम पुत्राः। क्व स्थ यूयं सर्वे ? आगच्छताद्यैव ! युष्मदर्थमहं बहुसन्तप्तहृदयोऽस्मि !" इति। निजार्भकदर्शनार्थं माता वा मित्रदर्शनार्थं मित्रं वा प्रियदर्शनार्थं प्रिया वा न जात्वप्येवमभिकांक्षति।

वीतरागहृदयोदितमेतदाह्वानं भावीशिष्याणां हृदयानि अगोचरं

सदेवास्राक्षीत्। एकैकशस्ते सर्वे आगन्तुं प्रवृत्ताः। रामचन्द्रदत्त—मनोमोहनमित्र—महेन्द्रनाथगुप्त—सुरेन्द्रनाथमित्र-गिरीशचन्द्रघोषादि— गृहस्थभक्ताः लाटु—राखालचन्द्र—नरेन्द्रनाथ—तारकनाथ—शरच्चन्द्र—शशिभूषण—हरि-बाबूरामादि—भविष्यत्संन्यासिशिष्याश्च क्रिस्ताब्दे १८८४ तमात् संवत्सरात्प्रागेव सम्मिलिता गुरुपादाम्बुजयोः । शनैश्शनैस्तान् शिक्षयितुं प्रववृते च श्रीगुरुः। गृहमेधिनो, गृहत्यागार्हान् निरङ्कितसंसारसंस्कारांश्च तत्तदुचिते साधनामार्गे प्रवर्तयामास ।

श्रीरामकृष्णदेवस्य सन्देशप्रसारणं कृतवत्सु तच्छिष्येषु विवेकानन्दस्वामी (नरेन्द्रनाथः) महेन्द्रनाथगुप्तश्च प्रमुखौ । श्रीरामकृष्णः सूत्रकार इति वदेच्चेत्तर्हि विवेकानन्दस्वामी भाष्यकार इति वक्तव्यम्। महेन्द्रनाथस्तु वेदकल्पं श्रीरामकृष्णदेवस्योपदेशं प्रति व्यासायितः इति ज्ञेयस्तत्सङ्ग्राहकत्वात्। विना ताभ्यां प्रायशः श्रीरामकृष्णो जगतोऽदृश्योऽभविष्यत् पर्वतेनाप्रतिबद्धोऽत एव मोघो मेघ इव ॥

## २०

## लीलानाटकस्य चरमोऽङ्कः

अविरततपोद्वारा पेशलीकृतस्तस्य देहोऽधुना निरन्तरवाग्व्यापाररूपोपदेशेन ततोऽप्यधिकतरं जर्जरितो बभूव। तत्फलात्कण्ठे मांसार्बुदमुदितं दृष्टम् (क्रिस्ताब्दे १८८५तमे संवत्सरे)। चिकित्सार्थं काशीपुराख्ये प्रदेशे गृहमेकं भाटकेनादाय तत्र श्रीरामकृष्णदेवमानिन्युर्भक्ताः। सुप्रसिद्धभिषज आहूताः। ते च रोगशमनाय महाप्रयत्नं चक्रिरे।

श्रीरामकृष्णोऽपि भैषज्यपथ्यादिविषये तैरादिष्टान् सर्वान् नियमान् पालयामास मुक्त्वा द्वौ। कण्ठस्थत्वाद्रोगस्य तदुल्बणकारी वाग्व्यापारो निषिद्ध इति रोगहारिणः। हृदयस्थत्वात्कृपायाः संसारपङ्कनिमग्नजीवलोकान् प्रति, विना वाग्व्यापारं तदभिव्यक्तेरशक्यत्वाच्च पतत्यपि शरीरे ज्ञानवितरणं कुर्यमेवेति भवरोगहारी सद्गुरुः। एतत्प्रथममुल्लङ्घनम्। वारं वारं समाधिप्राप्तिस्तु द्वितीयमुल्लङ्घनम्। रोगतच्चिकित्सकयोर्मध्ये तुमुलं युद्धमभवत्। श्रीगुरुतच्छिष्याणां मध्ये च। रोगोऽशमनीय इति ज्ञानाद्भीत्वा तच्छमनं स्वयोगबलेनैव कुर्याः, तथैव रोगशमनं साध्यमिति नरेन्द्रस्तमपृच्छदेकदा। कृत्स्नं मनो भवतारिणीमातुः पादयोः पुरैवार्पितत्वात् तदेतत्सुतरां न साध्यमिति प्रत्यवदत् गुरुदेवः। अन्ते शिष्यस्य प्रीतिपूर्वकाग्रहेण प्रयुक्तः श्रीरामकृष्णदेवः श्रीमातुः पादयोस्तेषां विज्ञापनं निवेदयामास। स्वल्पकालानन्तरं शिष्यमाहूयैवमुक्तवान्—'युष्मद्याचनाप्रेरितोऽहं श्रीमातरमेवं पृष्टवान् ''एतन्मुखेन किञ्चिदप्याहारसेवनं न साध्यम्, किं कुर्याम्?'' इति। युष्मान् सर्वान् दर्शयित्वा सोवाच जगन्माता ''एतैः सर्वैर्मुखैस्त्वमेवाश्नन्नासीः एकेन मुखेनाशितुं न शक्तश्चेत्तेन किम्?'' इति। अतो बहुलज्जितोऽस्मि!' इति। तच्छ्रुत्वा नरेन्द्रः परमाश्चर्यप्रतिबद्धवाग् बभूव।

पञ्चवर्षेभ्यः प्रागेव श्रीरामकृष्णदेवः सारदामणिमुक्तवान्—'यदाऽहं कल्कत्तानगर्यां रात्रीः क्षपयिष्यामि, यदा च केवलं पायसमेवाहारो भविष्यति तदा मे लीलाया अन्तवेलाऽऽगतेति विद्धि' इति। तत्सर्वमक्षरशः सत्यमभवत्॥

## २१

## कल्पतरुः

क्रिस्ताब्दे १८८६ तमसंवत्सरस्य प्रथमे दिने श्रीरामकृष्णः स्वगृहाद्बहिरागत्य तत्र समीपे तिष्ठन्तं गिरीशचन्द्रमुवाच—"गिरीश ! अथ केन प्रत्युक्तस्त्वमहं भगवतोऽवतार इत्युक्तवान् ? कमेव महिमानं दृष्ट्वा मयि वदन्नासीरेवम्?" इति। श्रीरामकृष्णदेवो भगवतो नारायणस्यैव अपरावतारः इति गिरीशः पदे पदे घुष्टवान्। अत एवैष प्रश्नप्रसङ्गः। हिमवत्पर्वतसदृशश्रद्धाभक्तियुक्तो गिरीशस्तु निर्भीकः सगद्गदमुवाच—

**व्यासेन महिमा यस्य वाल्मीकिमुनिना तथा ।**
**अनिरुक्तस्तमद्याहं वर्णयामि कथं प्रभो ।।** इति।

तच्छ्रद्धावशीकृतस्सन् श्रीरामकृष्णदेवस्तं तथा तत्रासीनानितरांश्च अनुजग्राह विविधविचित्राध्यात्मिकानुभवदानेन। कल्पतरुवत् तत्तदिष्टार्थदानेन श्रीरामकृष्णोऽपि कल्पद्रुमायितः। अद्याप्येष दिवसः 'कल्पतरुदिनम्' इति विख्यातः उत्सवरूपेणानुष्ठीयते ।।

## २२

## महासमाधिः

काले रोगः उल्बणतरो जातः। श्रीरामकृष्णोऽपि परिनिर्वाणात्पूर्वमेव नरेन्द्रप्रमुखान् सर्वान् भविष्यत्संन्यासिशिष्यान् शिक्षयितुं प्रवृत्तः। एकदा नरेन्द्रोऽद्वैतानुभूतियुक्तं निर्विकल्पाख्यं समाधिं प्राप्तवान् स्वसाधन-

बलाद्गुर्वनुग्रहपूर्वकात्। तदनन्तरं श्रीरामकृष्णदेवस्तं प्रत्युक्तवान् 'अलमेतेनेदानीम्। एषोऽनुभवसंस्कारो ममान्तः तालेन बद्ध इव वर्तते। बहुकार्याणि कर्तव्यानि त्वया लोकसंग्रहार्थम्। तदुपरिष्टादेव पुनस्तमनुभवं प्राप्स्यसि!' इति।

सर्वेषां शिष्याणां मध्ये नरेन्द्रनाथ एवाग्रेसरो मम सन्देशं जगति प्रसारयितुं शक्तश्चेति दृष्ट्वा श्रीरामकृष्णदेवस्तमेव नेतारं कृत्वा तं प्रत्यवोचत्—'नरेन्द्र ! एतेषां भाविसंन्यासिशिष्याणां संरक्षणभारं त्वयि न्यस्यामि। तान् सर्वानेकत्र सङ्गृह्य शाधि! तत्साहाय्येन च, दुरवस्थां प्राप्तमेनं सनातनधर्मं पुनरुज्जीवयस्व। एतन्मम परमानुशासनम् !' इति।

तन्महाकार्यनिर्वहणाय लोकगुरुः श्रीपरमहंसदेवस्तं शिष्याग्रणीं नरेन्द्रनाथं स्वार्जितनिखिलतपश्शक्तिभिर्बभार। तत्कथमिति वर्ण्यते—चरमसमाधेः किञ्चित्कालात् पूर्वं श्रीरामकृष्णो नरेन्द्रमाहूय निकषोपवेशयित्वा तद्दृष्टौ स्वदृष्टिं संस्थाप्य समाधिं प्राप। विद्युदिव काचिदतीन्द्रियशक्तिरात्मानं प्रविष्यन्त्यास्ते इत्यनुभूतवान् नरेन्द्रः। क्षणात्सोऽपि निस्संज्ञोऽभूत्। बहुकालानन्तरं यदोत्थितचित्तस्तदाऽश्रूणि विमोचयन्तं श्रीगुरुं ददर्श। उक्तवांश्च श्रीगुरुः 'हन्तेदानीं दरिद्रोऽस्मि युष्मदर्थं दत्तसकलतपोधनत्वात् ! भवांस्त्वेतेन जगदुद्धारणं कर्तुमर्हति !' इति। गुरुकृपाभिभूतमनाः शिष्यवर्यस्तु दण्डवत्प्रणाममकार्षीत्।

स्थूणानिखननन्यायेन श्रीरामकृष्णपरमहंसदेवस्याद्भुतं माहात्म्यम् अवतारत्वञ्च भूयो भूयः स्थापितमपि तन्निर्वाणात् त्रिभ्यो दिनेभ्यः प्राक् काचिच्छङ्कापिशाची नरेन्द्रस्य चित्तमाविवेश—'आसन्नमृत्यू रोगाकुली-

कृतकलेवर एष इदानीमहम् अच्युतस्य भगवतोऽवतार इति घोषति चेत् तर्हि विश्वसिमि !' इति। उदितमात्रायामाशङ्कायां श्रीरामकृष्णदेवः उवाच —"आ ! माणवक! अधुनाऽपि सर्वपरिश्रमान्तेऽपि संशय्यते त्वया? शृणुष्व ! यो दाशरथी रामो यश्च वासुदेवः कृष्णः स एवात्र देहे रामकृष्णो भवन्नास्ते। न तु तवाद्वैतवेदान्तदृष्ट्या !" इति। तन्निशम्य सविस्मयो नरेन्द्रो लुण्ठितशङ्को लज्जिताधोवदनश्चाभूत्।

लोकसङ्ग्रहार्थं स्वीकृतस्य लीलाविग्रहस्योत्सर्गदिनं प्राप्तम्। तच्च पञ्चाङ्गानुसारि निश्चितं तेनैव। स च क्रिस्ताब्दे १८८६तमे संवत्सरे आगष्टमासे १५ दिनाङ्कः। सायङ्काले श्रीरामकृष्णदेवस्य नाडीस्पन्दनं मन्दगत्यभूत्। श्वासप्रश्वासौ च विषमावभूताम्। मध्यरात्रेरूर्ध्वं योगशक्त्या प्राणं भ्रुवोर्मध्ये सम्यगावेश्य दृष्टिं च तत्र निधाय 'ॐ कालि !' इति त्रिवारं स्पष्टमुच्चार्य महासमाधिं प्रविवेश। तां वार्तां श्रुत्वा 'अम्ब! कालि! कोऽपराधो मे यस्मान्मामेवं त्यक्त्वा गतवत्यसि !' इत्याक्रोशं कृतवती सारदामणिदेवी। दुःखोद्रेकं सोढुमशक्नुवन् नरेन्द्रो बहिर्दधाव।

परेऽहनि सायङ्काले सहस्रेषु भक्तेषु पश्यत्सु शरीरदहनक्रिया समाप्ता। चित्ते तच्चित्रं हृदये तद्विरहशोकं च विधृत्य सर्वे स्वस्थानानि जग्मुः।

नातिचिरेण नरेन्द्रादिषोडशशिष्याः संन्यासाश्रमं स्वीचक्रिरे। एकत्र सम्मिलिताः सन्तः श्रीरामकृष्णमहासङ्घं स्थापयित्वा सनातनधर्मस्य पुनरुज्जीवनाय यथाशक्ति व्यवसायं चक्रुः॥

## २३

## श्रीरामकृष्णपरमहंसोपनिषत्

अथ श्रीरामकृष्णपरमहंसोपनिषदं व्याख्यास्यामः। सैषाऽपरोक्षानुभवरूढा साधनप्रधाना च ।

निर्गुणं निराकारं च परं ब्रह्म । तदेव भक्तजनानां शीतल-भक्तेः प्रभावात् सगुणः साकारः परमेश्वरो भवति हिममिव जलात् शैत्यात् । स एव परमेश्वरो निखिलजगदन्तर्यामी च ।

राम-कृष्ण-शिव-विष्णु-गाड्-अल्ला इत्यादि विविध-नामभिर्निर्दिष्टं परं तत्त्वमपि स एव । स एव लक्ष्मी-दुर्गा-काली-सरस्वतीत्यादि देवीनामभिरपि निर्दिश्यते ।

व्यवहारदशायां यत्र पुरुषोऽज्ञो द्वैतमिव पश्यति तदा काल्यादिदेव्यः परस्यैव ब्रह्मणः शक्तय इति मन्तव्यम् । दाहिका शक्तिर्यथाऽग्नेः। वस्तुतस्तु तयोरत्यन्तमभेद एव।

परमेश्वरदर्शनमेव मानवजीवनस्य चरमोद्देशः तथैव मुक्तेः साध्यत्वात् । परमेश्वरस्तु द्रष्टुं स्प्रष्टुं च शक्यः। तेन सहालापोऽपि साध्यः। सर्वे धर्माः समानास्तमेव गमयन्ति च ।

अपि तु मायाजव॑निकाच्छ॒न्नः सः सुखेन द्रष्टुं॑ न ल॒भ्यः। कामकाञ्चनकामनै॑व मा॒या। तदप॑गमे सः स्वयमे॑वाविर्भ॒वति मेघापाये᳚ऽशुमानि॒व। ज्ञानमिश्रितभक्तिश्च माया॑नाशोपा॒यः। स एव सर्व॑मित्य॒तो दीन-दरिद्र-रोगी-अज्ञादीनां ना॑राय॒णदृष्ट्या सेवाऽपि अद्यतनकालेऽनुत्त॑मोपा॒यश्चित्तशु॑द्धिद्वा॒रा तं सा᳚क्षात्क॒र्तुम्।

कथञ्चित् तं ज्ञा᳚त्वा दृ॒ष्ट्वा स्पृ॒ष्ट्वा भवबन्धना᳚द्विमुक्ता भ॒वत। विमुक्ता भव॑तेत्यु॒प॑निषत्॥

ॐ शा॒न्तिः शा॒न्तिः शान्ति॑ः॥

यस्य वीर्येण कृतिनो वयं च भुवनानि च।
रामकृष्णं सदा वन्दे शर्वं स्वतन्त्रमीश्वरम्॥
योऽहं ममास्ति यत्किञ्चिद् इहलोके परत्र च।
तत्सर्वं भवतो नाथ पदयोरर्पितं मया॥

# श्रीरामकृष्ण-प्रणति-मालिका

जगतो जन्ममूलाय तस्यैव स्थितिहेतवे ।
उपसंहारकर्त्रे च रामकृष्णाय ते नमः ॥ १ ॥

धर्महानावधर्मस्य वृद्धौ सत्यां जनिं भुवि ।
वृण्वे हीति प्रतिज्ञातं शिरसा प्रणतोऽस्म्यहम् ॥ २ ॥

सनातनस्य धर्मस्य प्रदत्तस्य महर्षिभिः ।
प्रहाणिं परितो दृष्ट्वा सन्तापितवते नमः ॥ ३ ॥

वित्तेशपूजितौ पादौ यस्य तं वित्तशून्यताम् ।
प्राप्तस्य क्षुदिरामस्य कुले जातं नतोऽस्म्यहम् ॥ ४ ॥

अन्नविद्यां विहायाशु ब्रह्मविद्यापरिग्रहम् ।
कुर्वन्तमन्नपूर्णायाः पतिं वन्दे गदाधरम् ॥ ५ ॥

दुष्प्राप्यो योगिभिर्यस्तु तं समाधिं परं सुखम् ।
बाल्य एव बलाकानां दृश्यात् प्राप्तं समाश्रये ॥ ६ ॥

विग्रहाराधनं ये ये दूषयन्ति महामदाः ।
तेषां समनुशिक्षार्थं कालिकां भवतारिणीम् ।
पूजयित्वा कृतार्थत्वं प्राप्तवन्तं नतोऽस्म्यहम् ॥ ७ ॥

अपरोक्षानुभूतिं तां प्राप्त्वाऽपि तु गुरोर्विना ।
सम्प्रदायस्य मानार्थं गुरून् संगृह्णते नमः ॥ ८ ॥

यं लब्धुं नग्नसंन्यासी यतते स्म चिरं भृशम् ।
निर्विकल्पं समाधिं तं सद्यः प्राप्तवते नमः ॥ ९ ॥

सर्वधर्मसमानत्वदर्शनाय स्वयं बहु ।
साधनान्याचरन्तं तं वन्दे सर्वजगद्गुरुम् ॥ १० ॥

सर्वसाधनसंजन्यफलानि सकलान्यपि ।
संन्यस्य सारदापादे सर्वमङ्गलदायिनि ॥ ११ ॥

सर्वस्त्रीषु च यथा मातृभावो मोक्षार्थिभिस्सदा ।
साधितव्यः प्रपञ्चेऽस्मिन् दर्शयित्रे नमो नमः ॥ १२ ॥

स्वेनार्जिततपःसिद्धिग्राहयोग्यनरान् प्रति ।
अभीप्सां यः करोति स्म तस्मै चिन्तावते नमः ॥ १३ ॥

आजन्मशुद्धसत्त्वानां नरेन्द्राद्यधिकारिणाम् ।
आगमान्मोदमानं च वन्दे तदनुशासने ॥ १४ ॥

कामिनीकाञ्चनत्यागः सर्वैरपि मुमुक्षुभिः ।
कर्तव्यो हि प्रयत्नेनेत्युक्तवन्तं नतोऽस्म्यहम् ॥ १५ ॥

क्लिष्टो दुरवगाह्यश्च वेदवेदान्तमध्यगः ।
उपदेशो निरायासः क्रियते येन ते नमः ॥ १६ ॥

श्रेयसे सर्वशिष्याणां स्वपादेऽर्पितचेतसाम् ।
तेषां पापानि सर्वाणि कर्षयन्तं नमाम्यहम् ॥ १७ ॥

सदानन्दे स्थितं वन्दे देहे दग्धेऽपि दारुणे ।
व्यथने यतिराजं तं सर्वभूतहितङ्करम् ॥ १८ ॥

समाप्य सर्वकर्माणि नरेन्द्रे सन्निधाय च ।
स्वशक्तिं लीलया देहं त्यक्तवन्तं नमामि तम् ॥ १९ ॥

